# चम्पूरामायणे

# बालकाण्डम्

०३ – ०६.११.२०१७

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

# पुनरावर्तनम्

- लक्ष्मीं तनोतु – गणेशप्रार्थना
- उच्चैर्गतिर्जगति – विप्रनमस्कारः
- गद्यानुबन्ध – चम्पूस्वारस्यवर्णनम्
- वाल्मीकिगीत – स्वकृतेः समर्थनम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

वाचं निशम्य भगवान् स तु नारदस्य
प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्याम्
पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥५॥

- कथारम्भः । वाल्मीकिमहर्षिः नारदोक्तां रामकथां श्रुत्वा ततः माध्याह्निकार्थं तमसानदीं गच्छति ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

वाचं निशम्य भगवान् स तु नारदस्य प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्याम् पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥५॥

- पदच्छेदः
- वाचम्, निशम्य, भगवान्, सः, तु, नारदस्य, प्राचेतसः, प्रवचसाम्, प्रथमः, कवीनाम्, माध्यन्दिनाय, नियमाय, महर्षि-सेव्याम्, पुण्याम्, अवाप, तमसाम्, तमसाम्, निहन्त्रीम् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

वाचं निशम्य भगवान् स तु नारदस्य प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्याम् पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥५॥

- अवाप = प्राप्तवान्, गतवान्
- किम् अवाप? तमसाम् = तमसानदीम्
- कीदृशीम् तमसाम्? महर्षिसेव्याम्, पुण्याम्, तमसां निहन्त्रीम्
- महर्षिभिः = ऋषिप्रवरैः, सेव्या = आश्रयितुं योग्या (अनुष्ठानार्थम्), ताम्

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

वाचं निशम्य भगवान् स तु नारदस्य प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्याम् पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥५॥

- पुण्याम् = पावनीम्
- तमसाम् = अज्ञानानाम्, निहन्त्रीम् = विनाशिनीम्
- किमर्थम् अवाप? माध्यन्दिनाय नियमाय = माध्याह्निकक्रियां कर्तुम्

वाचं निशम्य भगवान् स तु नारदस्य प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्याम् पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥५॥

- कः अवाप? सः प्राचेतसः = प्रचेतसः अपत्यं, वाल्मीकिः
- कीदृशः प्राचेतसः? भगवान्, प्रवचसां कवीनां प्रथमः
- भगवान् = पूज्यः
- प्रवचसाम् = प्रकृष्टगिरां, कवीनाम् = काव्यकर्तॄणाम्, प्रथमः = आद्यः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

वाचं निशम्य भगवान् स तु नारदस्य प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्याम् पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥५॥

- कदा अवाप? नारदस्य वाचं निशम्य
- नारदस्य = त्रिलोकसञ्चारिणः देवर्षिप्रवरस्य
- वाचं = गिरम्
- निशम्य = श्रुत्वा

# वाचं निशम्य भगवान् स तु नारदस्य प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
# माध्यन्दिनाय नियमाय महर्षिसेव्याम् पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥५॥

- रामायणप्रसङ्गः
- तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् । नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ (बाल १.१)
- को न्वस्मिन्... (बाल १.२)
- मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः । इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः॥ (बाल १.७)
- स मुहूर्तं गते तस्मिन् देवलोकं मुनिस्तदा । जगाम तमसातीरं जाह्नव्या अविदूरतः॥ (बाल २.३)
- अकर्दममिदं तीर्थं भरद्वाज निशामय । रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा ॥ (बाल २.५)

वाचं निशम्य भगवान् स तु नारदस्य प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्याम् पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥५॥

- अन्वयः – प्रवचसां कवीनां प्रथमः सः भगवान् प्राचेतसः नारदस्य वाचं निशम्य माध्यन्दिनाय नियमाय महर्षिसेव्यां पुण्यां तमसां निहन्त्रीं तमसाम् अवाप ।
- तात्पर्यम् – आदिकविः पूज्यः वाल्मीकिः नारदमुखात् रामकथां श्रुत्वा माध्याह्निकक्रियां कर्तुम् ऋषिप्रवराश्रितां पावनीम् अज्ञानविनाशिनीं तमसानदीं गतः ।

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

वाचं निशम्य भगवान् स तु नारदस्य प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्याम् पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥५॥

- अवाप – 'आप्लृ प्राप्तौ' (५, परस्मै), लिट्, १.१
- निशम्य – 'शमु उपशमे' (४, परस्मै), ल्यबन्ताव्ययम्
- वाचम् – चकारान्तः, स्त्रीलिङ्गः, २.१
- भगवान् – तकारान्तः, पुंलिङ्गः, १.१ । भगः अस्य अस्तीति भगवान्। भग+मतुप् (तद्धितः)

वाचं निशम्य भगवान् स तु नारदस्य प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्याम् पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥५॥

- प्राचेतसः – प्रचेतसः अपत्यं पुमान् । प्रचेतस् + अण् (तद्धितः)
- प्रवचसाम् – प्रकृष्टानि वचांसि येषां ते । सकारान्तः, पुं, ६.३
- माध्यन्दिनः – मध्ये भवः । मध्य+अञ् (तद्धितः)
- तमसाम् – आकारान्तः, स्त्री, २.१ । सकारान्तः, नपुं, ६.३
- निहन्त्रीम् – नि-हन्+तृच् (कृत्)+ङीप् (स्त्री) । ईकारान्तः, स्त्री, २.१

तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निस्ससार सरस्वती ।

- क्रौञ्चघातिनं व्याधं प्रति वाल्मीकेः शापः ।
- तत्र, कञ्चन, क्रौञ्च-मिथुनात्, एकम्, पञ्च-शर-विद्धम्, अपि, व्याधेन, अनुविद्धम्, निध्यायतः, बद्ध-अनुकम्पस्य, भगवतः, वाल्मीकेः, वदन-अरविन्दात्, छन्दोमयी, काचित्, एवम्, निस्ससार, सरस्वती ।

तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निस्ससार सरस्वती ।

- तत्र = तमसातीरे
- क्रौञ्चमिथुनात् = बकविशेषद्वन्द्वात्
- एकं = पुमांसम्
- पञ्चशरविद्धम् = मन्मथाहतम्

तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निस्ससार सरस्वती ।

- व्याधेन = निषादेन
- अनुविद्धम् = पुनः प्रहृतम्
- निध्यायतः = पश्यतः
- बद्धानुकम्पस्य = उत्पन्नकरुणस्य

तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निस्ससार सरस्वती ।

- भगवतो वाल्मीकेः = महर्षेः प्राचेतसस्य
- वदनारविन्दात् = मुखकमलात्
- छन्दोमयी = अनुष्टुप्-छन्दसि निबद्धा
- काचित् = अपूर्वा

तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निस्ससार सरस्वती ।

- एवम् = वक्ष्यमाणरीत्या
- निस्ससार = निर्गता, निजप्रयत्नं विना बहिर्याता
- सरस्वती = वाक्

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निस्ससार सरस्वती ।

- ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ॥ (बाल २.१३)
- ततः करुणवेदित्वाद् अधर्मोऽयमिति द्विजः ॥ (बाल २.१४)
- शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥ (बाल २.१८)
- शोकः श्लोकत्वम् आगतः ॥ (बाल २.४०)

तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निस्ससार सरस्वती ।

- तात्पर्यम् – तमसातीरे परस्परं सन्तोषेण रममाणयोः द्वयोः क्रौञ्चयोः मध्ये एकं पक्षिणं व्याधेन प्रहृतं दृष्ट्वा (क्रौञ्च्याः आर्तनादं च श्रुत्वा) उत्पन्नकरुणस्य वाल्मीकिमहर्षेः मुखात् छन्दोबद्धा अपूर्वा वाणी निर्गता ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निस्ससार सरस्वती ।

- क्रौञ्चमिथुनात् – क्रौञ्चयोः मिथुनम्, तस्मात्
- पञ्चशरविद्धम् – पञ्च शराः यस्य सः, पञ्चशरेण विद्धम् । 'व्यध ताडने' (४, परस्मै) + क्त (कृत्) । 'कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः' (अमरः)
- निध्यायतः – तकारान्तः, पुं, ६.१ । नि-'ध्यै चिन्तायाम्' (१, परस्मै)+शतृ (कृत्)
- बद्धानुकम्पस्य – बद्धा अनुकम्पा यस्य सः, तस्य । 'कृपा दयानुकम्पा स्यात्' (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value · Education · Technology

तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निस्ससार सरस्वती ।

- वदनारविन्दात् – वदनम् अरविन्दम् इव, तस्मात्
- छन्दोमयी – छन्दस् + मयट् (तद्धितः, ताद्रूप्ये) + ङीप् (स्त्री)
- निस्ससार – निस्-‘सृ गतौ’ (१, परस्मै), लिट्, प्रथम.१
- सरस्वती – ‘ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वती’ (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकम् अवधीः काममोहितम् ॥६॥

- वाल्मीकेः मुखात् निर्गतां वाणीम् अनुवदति ।
- मा, निषाद, प्रतिष्ठाम्, त्वम्, अगमः, शाश्वतीः, समाः, यत्, क्रौञ्च-मिथुनाद्, एकम्, अवधीः, काम-मोहितम् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकम् अवधीः काममोहितम् ॥६॥

- हे निषाद – हे व्याध!
- मा अगमः – मा गच्छ, मा प्राप्नुहि
- किम् मा अगमः? प्रतिष्ठाम् – स्थितिम्, माहात्म्यम्, यशः, ऐश्वर्यानन्दावाप्तिम्
- कः? त्वम्
- कियत्कालम्? शाश्वतीः समाः - अनन्तसंवत्सरान्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकम् अवधीः काममोहितम् ॥६॥

- यत् = यस्मात् कारणात्
- अवधीः = हतवान्
- कम् अवधीः? क्रौञ्चमिथुनात् एकम्
- कीदृशम्? काममोहितम् = स्मरविवशम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकम् अवधीः काममोहितम् ॥६॥

- अन्वयः – हे निषाद! यत् काममोहितं क्रौञ्चमिथुनात् एकम् अवधीः, (तस्मात्) त्वं शाश्वतीः समाः प्रतिष्ठां मा अगमः ।
- तात्पर्य्यम् (साक्षाच्छ्रुतार्थः) – हे व्याध! निर्दयः त्वं स्मरविवशं (प्रियया सह क्रीडारतं) क्रौञ्चपक्षिणं हतवान् । अतः अनन्तसंवत्सरकालं प्रतिष्ठां मा प्राप्नुहि ।
- बहुधा व्याख्यातः श्लोकः । रामपरत्वेन (मानिषाद), रावणपरत्वेन, इत्यादि ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
# यत्क्रौञ्चमिथुनादेकम् अवधीः काममोहितम् ॥६॥

- अगमः – 'गम्लृ गतौ' (१.परस्मै), लुङ्, मध्यम.१ ।
- अवधीः – 'हन हिंसागत्योः' (२.परस्मै), लुङ्, मध्यम.१ ।
- मा – अव्ययम् । 'माङि लुङ्' (३.३.१७५) । 'न माङ्योगे' (६.४.७४) इति अडागमनिषेधः । मा भूत्, मा कार्षीः, मा श्रौषम् । अत्र अडागमः आर्षः।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
# यत्क्रौञ्चमिथुनादेकम् अवधीः काममोहितम् ॥६॥

- समाः – ‘संवत्सरो वत्सरोऽब्दः हायनोऽस्त्री शरत् समाः’ (अमरः) । आकारान्तः, स्त्री, २.३ । ‘कालाध्वनोरत्यन्तसंयोगे’ (२.३.५) इति द्वितीया ।
- अनुष्टुप्-छन्दः – ‘पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । गुरु षष्ठं च सर्वेषाम् एतच्छ्लोकस्य लक्षणम् ॥’

# सङ्क्षेपः

- वाचं निशम्य – वाल्मीकिः नारदात् रामकथां श्रुत्वा माध्याह्निकं कर्तुं तमसानदीं गच्छति
- तत्र क्रौञ्चमिथुनादेकं व्याधेन निहतं दृष्ट्वा शोकाविष्टस्य तस्य मुखात् शापः श्लोकरूपेण निस्सरति
- मा निषाद – वाल्मीकिः व्याधं शपति






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in